दूरनेसंकेतः - "संस्कृतम्"

वाणीं भजत गैवाम्

# गैवाणी

## मासिकी पत्रिका

संस्कृतभाषाप्रचारिणी सभा, चित्तूर (आ. प्र.) भारतम्.

संपुटः ११ | 15 JULY 197 | क्रमांकः ७



प्रमादीच-
आषाढांकः

शकाब्दाः १८९५

मूल्यम्
०-४० पैसाः

# विषयसूचिका



(अत्र पृष्ठानां अनुस्यूत्यां भंगं मर्षयन्तु सहृदयाः)





# आर्जवं हि कुटिलेषु न नीतिः

साधु परिभूयते असाधुः परिचर्यते,
स्वादु भृशमद्यते कटुकं परिह्रियते,
हरिणो मृगमात्रं सिंहो मृगराजः,
ऋजु प्रतार्यते कुटिलः अनुनीयते ॥

पाकः परितोऽनुनीयते लोकेन,
शान्तस्वान्तं भारतं तु अवमन्यते,
चीना प्रसाद्यन्तेऽनुनयै,
नानाविधं प्रबाध्यते भारतम् ॥

रोटीपोटलिकाभिरावर्ज्यते,
धाटीसमाटीकनैश्च विभीष्यते,
बहुसमस्याकल्पनैः प्रबाध्यते,
मुहुर्मुहुः वनगज इव निपात्यते ॥

भारतं विभक्तं सीमासु व्रणितं,
व्रणशोधनेप्यनवकाशं सत् व्यथितं,
स्वौदार्येण स्वयमेव संयतमवस्थितं,
अनृतनिन्दाभिरभितो दूषितम् ॥

# सम्पादकीयम्

## नर्तने अशक्ता मार्दंगिकं आक्षिपेत्

मूल्यस्य दिनदिनाभिवृद्धेः सामान्यजनानां जीवितं अस्तव्यस्तं भवति । उद्योगशीलाश्च वेतनग्रहणवेलायां विकसितमुखा अपि ऋणप्रतियातनात्परं प्रथमसप्ताहे एव म्लानमुखा जलोद्धृता मीना इव परितः विलश्यन्ति । दारिद्र्यदोषेण च उत्कोचादिभ्यः करं प्रसारयन्ति । तथापि अनापूरितकुक्षयः कार्यस्थगनबन्धादिशस्त्रास्त्राणि शातयन्ति । यत्किंचिद्वेतननवर्धनेनापि तेषां आकांक्षापूर्तिर्न भवति । तेषामायेन सहैव मूल्यानामपि अभिवृद्धिः आपतत्येव । अतः "पुनर्दरिद्रः पुनरेव पापी" इत्याभाणकानुगुणं वर्तते तेषां दुर्दशा ।

एतां समस्यां मूलतोऽविचार्य बाह्यरूपदर्शनेन निवारणप्रयत्नेन हनुमल्लांगूलमिव सा जटिला भवति । सर्वाणि नाणकानि अर्बुदन्यर्बुदसंख्यया व्यवहारे अवतारितान्यपि समस्यां न परिष्कुर्वन्ति, प्रत्युत सागरजलमौर्वाग्निमिवाधिकं संदीपयन्ति ।

आहारधान्यानां मूल्यस्य तनूकरणेन अन्येषां वस्तूनां मूल्यानि स्वतः ह्लसेयुः, अथवा सामान्यप्रजानां सुखस्य मार्गोप्युद्घाटितो भवेत्, दुष्परिणामाश्च क्रमशो दूरतो भवेयुः ।

आहारमूल्यस्थगनार्थं सर्वकारेण आहारमहावाणिज्यायाः आत्मायत्तीकरणं संकल्पितं । तेन सहैव धान्यादानमूल्यमभिवर्धित-

मासीत् । एतेन प्रथमक्रय एवाधिकमूल्यं तत् संरक्षणकोष्ठेषु कृमिकीटमूषिकादिजग्धं, भारे च न्यूनं, स्तरे च विभिन्नं, सकलस्थलप्रेषणसंविधानसंकटपतितं सत् महार्घमेव विक्रीयेत ।

एवमपि स्वदोषं कृषकेषु, वाणिक्षु च आरोपयति सर्वकारः । सर्वकारायत्तं सर्वमपि सुस्थमिति मैवानुभवामः, प्रत्युत अन्यथैव जनानामनुभवः । व्यक्तिगतविषये व्यक्तिः समाजस्समितिर्वा एकैकस्यां दशायां जागरूकतामवलबते । सर्वकारायत्तस्य विषयस्य तु न कोपि बाद्धचो भवति । उन्मत्तबीजमिश्रितगोधूमचूर्णप्रभृतीनि बहून्युदाहरणानि लभ्यन्ते । तंडुलेषु अयश्चूर्णमिश्रणादधिकं न वक्तव्यम् । यद् सर्वकारस्पृष्टं तद्वस्तु आदेशानुसारं अविभक्तं, पाताळगतं, आकाशचुंबिमूल्येन सह अन्धकारापणे अव्यक्तं गोचरीभवति । शर्कराविषये इयं दुरवस्था अनुभूयते । शर्करा च मासमध्ये कदाचित् हठादवतरति, द्वित्रदिनेष्वेव अदृश्यतां सा गच्छति । तादृशे अल्पकाले धनं दत्वा एकदैव सर्वमादातव्यम् । अन्यथा नास्ति शर्करा । अपि च शर्कराभ्यासहीनाश्च तदादानपत्रवन्तः पत्रविक्रयाय प्रयतन्ते, वाणिजश्च तत्पत्रक्रयणाय सन्नह्यन्ति । इदं त्वेकं प्रहसनं यदल्पमूल्येन शर्करा जनेभ्यो विभज्यत इति । सा च तदुपयोगिनां कृते अपर्याप्तैव वर्तते । किञ्च सर्वकारः शर्करोत्पादनिकासु शर्करां अल्पमूल्येन स्वीकृत्य तल्लाभार्थं शिष्टस्य सर्वस्य तदिच्छाधीनमूल्याय आपणे विक्रयाय अधिकारमार्पिपत् । अद्ययावच्च तंडुलकणविषयेपि एषैव नीतिराश्रीयते । शालिधरट्टकेभ्यः लेवीं स्वीकृत्य विभजनेन अतिरिक्ततंडुलाना मर्घोधिकस्स्वत एवांगीकृतः । सर्वधान्यस्य सर्बकारायत्तत्वे किल किं वा भविष्यति इति नैव ज्ञायते । गोधूमवाणिज्यास्वीकरणपंकमज्जनेनापि सर्वकारगजस्य ज्ञानमुद्भवेदिति बहवो मन्यन्ते ।

वस्तुतः धान्यं गोधूमं तंडुलं वा देशे बहुलं विद्यते, यावत् कुसूलेषु न माति, नूतनधान्यसंरक्षणाय च अवकाशो नास्ति च। तथापि सर्वंकारचेष्टाधीना आशाग्रस्ताः तत्पातालबिलेषु रक्षन्ति अधिकमूल्यसंपादनाय। नैषाऽतिशयोक्तिः यत् सर्वंकारे क्रयणाद्विरते मूल्यं धान्यस्य पंचाशच्छातं ह्रस्वीभवेत् तदनुगुणं च इतरवस्तूनां, कर्मचारिणां आंदोळनानि च नश्येयुः सुखसंतोषादिकं च प्रजानां प्रवर्धेत इति।

एतत्सर्वं विभावनीयं प्रजा नाम न केवलमुत्पादयितारः, अपितु तदुपयोक्तारोऽपीति। तत्पाक्षिकदृष्टिमुत्सृज्य विनियोक्तॄणामपि क्षेमं मनसि निधायैव विधानानि निरूपणीयानि।

**अन्नं बहु कुर्वीत !**

---




गृहिणी– तंडुलानामभावोद्य जागर्ति।

गृही– कंचित्कालं सहस्व। अस्मत्सम्मतिग्राही सर्वसंकटनिराकृतिं प्रतिज्ञातवान् खलु। सोऽमात्यो भवतु।

* * *

एकः– कोऽयं दुष्कालः देवतामूर्तिष्वपि पादरक्षाः प्रयुज्यन्ते।

अन्यः– करुणावरुणालयस्स देवः पादरक्षाप्रहारिणं तं कन्नप्पमेव मनुते किल।



# साहित्यशास्त्रे ध्वनिसम्प्रदायस्य सर्वसम्प्रदायसंग्राहकता

रचयिता श्री समुद्राल रङ्गरामानुजाचार्य, द्वारकतिरुमला.

[पूर्वानुबन्धः]

अलङ्कारवादोऽपि ध्वनिवादाङ्गभूत एव। अलङ्कारो हि द्विविधः– शब्दगतोऽर्थगतश्चेति। अर्थगतालङ्कारोऽपि द्विविधः वाच्यवृत्यालिङ्गितः तदनालिङ्गितश्चेति। यः वाच्यवृत्यनालिङ्गितः स एव प्रतीयमानरूपतया ध्वनिरिति ध्वनिवादिभिर्व्यपदिश्यते। स एव काव्ये अन्यालङ्कारापेक्षया चमत्कारनिबन्धनं प्राधान्यं भजति। तदर्थमेवान्यवाच्यालङ्कारोपादानमिति व्यङ्ग्यालङ्काराणां ध्वन्यङ्गतायां सत्यां, वाच्यालङ्काराणां तदङ्गता ख्यातप्रायैव।

अयमपरो विशेषः। यमकोपमादीनामलङ्काराणां लौकिककटकाद्यलङ्कारसम्मितत्वं निखिलाभ्युपगतम्। लौकिकालङ्काराः शरीराश्रिताः कृत्रिमाः बाह्यशोभाहेतवश्चेति काव्यालङ्काराणामपि तथात्वमेव वक्तव्यम्। तदैवालङ्कारपदस्यान्वर्थता। एवं तेषां शब्दार्थाश्रितत्वपर्यवसानात् प्राधान्यं न सम्भवति। किञ्चालङ्काराणामुपस्कारकत्वात् नियतमुपस्कार्यः अन्यः अङ्गीकार्यः। काव्ये हि सर्वप्रधानतया रस एवोपस्कार्य इति तदुपस्कारकतया अलङ्काराणामलङ्कारत्वमन्वर्थं भवतीति च अलङ्कारवादोऽपि स्वेन रूपेण अवस्थातुं न प्रभवतीति ध्वनिवादाङ्गतैव युक्ता अलङ्कारवादस्य।

अथ गुणवादोऽप्येवमेव। गुणो ह्यमुख्यवृत्त्या शब्दार्थाश्रितत्वेन प्रसिद्धोऽपि मुख्यतो रसाश्रय एव। अतः काव्योपात्तरसानुरोधेन तत्तद्रसव्यञ्जकतया गुणोऽपि रसरूपध्वन्यङ्गभूत एव। अत एव "मधुरो रसः" इत्यादिविश्वजनीनव्यवहारा उपपद्यन्ते। एवं गुणवादस्यापि ध्वनिवादाङ्गतायां सत्यां विशिष्टपदसङ्घटनारूपायाः रीतेरपि रसानुकूलतया उपादेयत्वेन रसरूपध्वन्यङ्गत्वं सूपपादमेव। औचित्यमपि रसादिकमाश्रित्यैव तिष्ठति, न तु स्वरूपत इति औचित्यवादोऽपि ध्वनिवादाङ्गमेव।

वक्रोक्तेः भङ्गीभणितिरूपायाः प्राचीनालङ्कारिकैः अलङ्कारत्वमभ्युपगतमिति तस्याः ध्वन्यङ्गत्वं निर्बाधमेव।

एवं प्राचीनानां सर्वेषां रसादिसम्प्रदायानां ध्वनिसम्प्रदायान्तर्भावे निरूपिते नवीनस्य अनुमितिवादस्यापि ध्वनिवादानतिरिक्तता अवश्यवक्तव्या।

तथा हि –

प्रतीयमानः अर्थः सहृदयहृदयवेद्यः अस्तीति अनुमानवादिनाप्यभ्युपगतप्रायमेव। किन्त्वयमत्र विशेषः – सहृदयश्लाघ्यस्य अर्थस्य प्रतीत्यर्थं व्यञ्जनात्मको यो व्यापारो ध्वनिवादिभिरभ्युपगत, तं विनैव अनुमानरूपप्रमाणेन व्यङ्ग्यतयाऽभ्युपगतस्यार्थस्य प्रतीतिर्भवतीति तेषां आशयः।

अनुमितिवादिनस्त्वयमभिप्रायः –

"शब्दादर्थाद्वा असंबद्धोऽर्थः नैव भवतीति निश्चप्रचम्। तथा चेत् यस्मात् कस्मादपि शब्दात् यस्य कस्याप्यर्थस्य प्रतीतिरापद्येत। एवं शब्दात् तत्प्रतिपाद्यादर्थात् वा प्रतीयमानस्यार्थान्तरस्य तत्प्रतिपादकशब्दार्थाभ्यां अविनाभाव एव। अयमेव कार्यकारणभावः, साध्यसाधनभावः, लिङ्गलिङ्गिभावः इत्यादिशब्दैः व्यवह्रियते। एवञ्च व्यङ्ग्यस्यार्थस्य व्यञ्जकस्य च साध्यसाधन-

भावसम्बन्धसत्त्वात्, व्यञ्जकं साधनमनुमापकमति, व्यङ्गचोऽर्थः साध्यः अनुमाप्यः इति च व्यवहारः स्यात् । एवं व्यङ्गचप्रतीति-रनुमितिरूपेति, कृतं व्यङ्गचव्यञ्जकभावकल्पनया । इत्थं व्यङ्गच-व्यञ्जकभावस्य निरासात्, अनुमाप्यानुमापकभावस्यैवाभ्युपगमाच्च ध्वन्युदहरणेषु अनुमानप्रसक्तिरुदाहर्तव्या । यथा–

**"भ्रम ! धार्मिक ! विस्रब्धं स शुनकोऽद्य मारितस्तेन ।**
**गोदावरीकच्छनिकुञ्जवासिना दृप्तसिंहेन ।।"**

अत्र केनचित् सुकृतिना यूना सह विस्रम्भसम्भोगसुखास्वाद-लालसया विजने वने कृतसङ्केतया कयाचित्, कुसुमापचिचीषया भ्रमतः धार्मिकस्य तद्देशागमनं विघ्नमिव मन्यमानया विदग्धया नायिकया शुनः बिभ्यतस्तस्य धार्मिकस्य तादृशश्वमारकदृप्तसिंहा-वस्थित्युद्घाटनद्वारा विस्रम्भसञ्चारयोग्यतां विधिमुखेन प्रदर्श-यन्त्या प्रकारान्तरेण तद्गमनं निषिद्धमिति वस्तुस्थितिः ।

अत्र 'भ्रम धार्मिक विस्रब्ध'मिति वाक्यार्थरूपो भ्रमणविधिः वाच्यः । तस्य 'स शुनकोऽद्य मारितस्तेन' इत्यादिना श्वहननं दृप्त-सिंहविहितं वाक्यार्थरूपमेव हेतुः । तत्प्रतिषेधस्तु अनुमेयरूपः । एवमेव कार्यकारणभावस्तत्र तत्र उदाहरणेषु कल्प्यः"– इति ।

ध्वनिवादिनस्त्वत्र प्रत्यवतिष्ठन्ते–

अस्ति व्यङ्गचानुमित्योर्वैलक्षण्यम् । अनुमितिर्हि नियतरूपं दधाना व्यभिचारादिदोषादुष्टाद्धि हेतोर्भवति । व्यङ्गचन्तु नैवम् । व्यभिचारादिदोषदुष्टादपि व्यञ्जकाद्भवति । किञ्च व्यङ्गचमपि सर्वथा नियतरूपमेवेति न वक्तुं शक्यते । नैतदनुमानस्थले उप-पद्यते । व्याप्तिपक्षधर्मताज्ञानादिसहकृतेनैव हेतुना अनुमितिसिद्धिः । यथा - धूमरूपः हेतुः वह्निव्याप्य इति ज्ञातः, पक्षे पर्वतादौ दृष्टः, विपक्षे अस्थितश्च यः स एव वह्निरूपं साध्यं साधयितुं शक्नोति ।

यदि धूमस्य वह्नेरिव तदितरस्यापि साधकता, तर्हि न तस्य वह्नि प्रत्यनुमापकता, अन्यथा तु वह्निज्ञानस्य अप्रामाण्यापत्तेः। व्यङ्ग्यस्थले तु नास्ति पक्षधर्मताज्ञानाद्यपेक्षा नियतसाध्यसाधनभावापेक्षा वा। यदि अनुमापक इव व्यञ्जकोऽपि स्यात् तर्हि तत्प्रतिपन्नेऽर्थे सम्यङमिथ्यात्वादिसन्देहा एव न भवेयुः।

न हि व्यङ्ग्योऽर्थः सर्वत्रैकरूप इत्यनुभवः। "गतोऽस्तमर्कः" इत्यादिषु, व्यञ्जकात् सूर्यास्तमयरूपादर्थात् वक्तृबोद्धव्यादिसहकारेण व्यङ्ग्यार्थानां विभिन्नानां प्रतीतेः। अतः यादृशोऽविनाभावो व्याप्यव्यापकभावस्थले, न तादृशः व्यङ्ग्यव्यञ्जकभावस्थले इति वक्तव्यम्। अत एव "भ्रम धार्मिक विस्रब्ध" मित्यादिपद्ये हेतुः व्यभिचारदोषदूषितोऽपि निषेधरूपं व्यङ्ग्यार्थं समर्पयति।

उक्तञ्चात्र विषये मम्मटभट्टैः–

"भीरुरपि गुरोः प्रभोर्वा निदेशेन प्रियानुरागेणाप्यनेवंभूतेन हेतुना सत्यपि भयकारणे भ्रमतीत्यनैकान्तिको हेतुः। शुनो बिभ्यदपि वीरत्वेन सिंहान्न बिभेतीति विरूद्धोऽपि। गोदावरीतीरे सिंहसद्भावः प्रत्यक्षादनुमानाद्वा न निश्चितः। अपितु वचनात्। न वचनस्य प्रामाण्यमस्ति, अर्थेनाऽप्रतिबन्धादित्यसिद्धश्च। तत्कथमेवंविधात् हेतोः साध्यसिद्धिः?" इति। "एवमेव 'निश्शेषच्युतचन्दन' मित्यत्रापि गमकतया उपात्तानां चन्दनच्यवनादीनां कारणान्तरतोऽपि सद्भावात् अनैकान्तिकत्वमेव तेषाम्। यथा तत्रैव स्नानकारणत्वेनापि प्रतिबद्धानि। व्यक्तिवादिना च अधमपदसहायानामेषां व्यञ्जकत्वमुक्तम्। प्रमाणाप्रतिपन्नेनाऽधमत्वेन कथमनुमानं भवितुमीष्टे।" इति च।

किञ्चायमप्यत्र विशेषः– यत्र व्यङ्ग्यार्थव्यञ्जकतया निविष्टानां विशेषणानां असाधारण्यं तत्रानुमानस्य प्रवृत्तिः, यत्र तु साधारणतयैवोपादानं तत्र न स्वप्नेऽप्यनुमानस्य प्रसक्तिः।

अत एव निश्शेषच्युतचन्दनमित्यादिपद्ये चन्दनच्यवनादीनां विशेषणानां वापीस्नानव्यावर्तनेन रमणरूपार्थं प्रत्यसाधारणव्यञ्जकत्वं प्रतिपादयतां अप्पय्यदीक्षितानां सरणिं प्रत्याचक्षाणेन पण्डितराजेन व्यञ्जकानामसाधारण्यसम्पादनं व्यक्तिप्रतिकूलमिति, अनुमानानुकूलमिति च सुदृढं प्रतिपादितम् ।

यथा– एवञ्च व्यञ्जकानां साधारण्यं प्रतिपादयतां प्रामाणिकानां ग्रन्थैः सह असाधारण्यं प्रतिपादयतस्तव ग्रन्थस्य विरोधः स्फुटः । किञ्च यदिदं निश्शेषेत्याद्यवान्तरवाक्यार्थानां वापीस्नानव्यावृत्तिद्वारेण व्यङ्ग्यासाधारण्यं सम्पाद्यते, तत् किमर्थ ? मिति पृच्छामः । व्यङ्ग्यस्य व्यञ्जनार्थमिति चेत्, व्यञ्जकगतासाधारण्यस्य व्यञ्जनानुपायात् । .... .... प्रत्युताऽसाधारण्यस्य व्याप्त्यपरपर्यायस्य अनुमानानुकूलतया व्यक्तिप्रतिकूलत्वाच्च । तस्मात् वाच्यार्थसाधारण्यमेवोचितमतिविदग्धनायिकानिरूपितानां विशेषणवाक्यार्थानाम्" इति ।

जगन्नाथपण्डितेन अस्मिन्नेव सन्दर्भे साधारणव्यञ्जकैरपि व्यङ्ग्यार्थप्रतीतिः 'औन्निद्र्य चिन्तालसत्व' मित्याद्युदाहरणमुखेन प्रदर्शिता ।

पूर्वोक्तसन्दर्भेण विशेषणासाधारण्ये एव अनुमानप्रसक्तिरिति, न तु साधारण्ये इति च सिद्ध्यति । व्यङ्ग्यन्तु साधारणविशेषणैरिव असाधारणविशेषणैरपि प्रतिपादयितुमर्हतीति व्यङ्ग्यव्यञ्जकभावस्य विस्तृतविषयता प्रतीयते । साधारणविशेषणस्थले व्यञ्जनायाः अवश्याभ्युपगन्तव्यतया असाधारणविशेषणस्थलेऽपि तथैव निर्वाहे सति नास्त्यनुमानस्य आवश्यकता ।

एवं सर्वेषु रसादिसम्प्रदायेषु ध्वनिसम्प्रदायाङ्गतां गतेषु साहित्यशास्त्रे ध्वनिसम्प्रदाय एव सर्वातिशायीति निश्चप्रचम् ।

---




ले. श्री राधा, नेल्लूरु.

सर्वप्राणिकर्तृविधातृसृष्टयां अस्पष्टानि बहूनि चित्रविचित्राणि दृग्गोचराणि भवन्ति । अपरिहरणीयाः अनुबन्धविशेषाः तत्र प्रतिबिम्बिताः सन्ति । जन्मजन्मान्तरेभ्यः युगयुगान्तरेभ्यश्च अविदिततलाः सागरा इव अनुबन्धविशेषाः अद्यापि परिदृश्यमाना एव सन्ति, भाविन्यपि काले परिदृश्येरन् इत्यत्रापि न संशयः । ते अनुबन्धाः भवन्ति द्वेषजनकाः वा प्रीतिजनका वा । प्रीतिजनकाः अनुबन्धविशेषाः आह्लादं मानसिकविकारं च जनयन्ति । द्वेषजनकाः अनुबन्धविशेषाः क्रोधं मानसिकदीप्तिं च जनयन्ति । मानवेषु विलक्षणो गुणः एकोऽस्ति । मनोहराणां बहूनां वस्तूनां दर्शनेपि तेष्वन्यतमं एव तन्मनोरञ्जकं भवति । तदेव सः सर्वोत्कृष्टम् वस्त्विति भावयति । नाऽनेन विरम्यते, किन्तु तत्संपर्कवेलायां आनन्दडोलाविहारादिकं च करोति । तद्वत् केषांचित् वस्तूनां दर्शने अनिर्वचनीयः निष्कारणश्च आवेशः रोषो वा समुद्भवति । तत्र दोषलेशाभावेऽपि तद्दर्शने असह्यताबुद्धिं प्रदर्शयति । "स्वेन मोहितैव रम्भा, स्वेन प्लावितैव गंगा" इति लोकोक्त्यनुसारेण प्रीतिजनकं वस्तु सर्वोत्कृष्टमिति, रोषजनकं वस्तु सर्वाधममिति च सः निर्वक्ति । तादृशपरिस्थितेः कारणं जन्मान्तरगतः अविच्छिन्नः अनुबन्धविशेषः इति आस्तिकानां वेदान्तिनां चाभिप्रायः ।

किन्तु सामान्यव्यक्तयः नास्तिकजनाश्च जन्मान्तरगतानुबन्धविशेषस्य कारणत्वं नांगीकुर्वन्ति । तेषां अलौकिकदृष्टयभाव

एव तत्र कारणम् । तादृशलौकिकदृष्टिमन्तः "भिन्नरुचिर्हि लोकः" इति वाक्यानुसारेण तद्वस्तुदर्शनजन्यानन्दातिशयस्य वा द्वेषातिशयस्य वा तद्गताकर्षणातिशयः एव कारणम् भवति, न तु जन्मान्तरानुबन्धविशेषः इति प्रवदन्ति । एकैकस्य एकैका रुचिः, एकैकस्य एकैका कांक्षा, एकैकस्य एकैकाशा, एकैकस्य एकैकं वेदनम् च नित्यम् अस्मन्नयनगोचरमेव । एवम् भिन्नरुचित्वरूपहेतुना तद्गताकर्षणातिशय एव तत्र कारणमिति तेषामभिप्रायः । एकस्मै पाण्डुरवर्णः रोचते, एकस्मै रक्तवर्णः रोचते । अन्यस्मै वर्णान्तरं रोचते । तद्वत् भिन्नभिन्नाकर्षणान्येव भिन्नभिन्नरुचीनां कारणानि, न तु जन्मान्तरानुबन्धः इति लौकिकानां नास्तिकानां च वादः ।

सूर्योदये पद्मं विकसति । चन्द्रे उदिते कुमुदं विकसितं भवति । राकासुधाकरदर्शनेन सागरः उत्तुंगतरंगप्लावितनाकलोको भवति । नीरदेषु पुष्करवितरणव्यापृतेषु मन्दं मन्दं गच्छती मयूरी स्वीयहेलालीलाविलासप्रदर्शनपूर्वकं नाट्यं करोति, चन्द्रास्तमये चकोरी प्रियविरहासहिष्णुतया गलद्बाष्पनयना भवति । सूर्ये अस्तंगते कमलानि मुकुलितानि भवन्ति । एतस्य सर्वस्यापि यत्किञ्चित् कारणं अवश्यं अंगीकार्यम् । कारणेन विना कार्यस्य असंभवः खलु । पद्मविकासे सूर्योदय एव कारणमिति चेत् सूर्योदयेन कुतः पद्मानामेव विकसनं स्यात् कुमुदानामपि ? इति प्रश्नः समुदेत्येव । अत एव एतस्य सर्वस्यापि येन केनापि कारणेन भाव्यम् । वेदान्तिनां आस्तिकानां अभिप्रायानुसारेण जन्मान्तरानुबन्धविशेषः वा नास्तिकाभिप्रायानुसारेण तत्तद्वस्तुगताकर्षणातिशयो वा कारणमिति अवश्यम् अंगीकार्यम् । सूर्यकमलयोः प्रीतिजनकः सम्बन्धविशेषः यथा, चन्द्रकमलयोः द्वेषजनकश्च सम्बन्धविशेषः तथैव - साहचर्यमिव वैरुध्यमपि प्रत्येकवस्तुप्रतिनियतम् इत्यत्र आलंकारिकाः एव प्रमाणम् । तथा हि –

**संयोगो विप्रयोगश्च साहचर्यं विरोधिता ।**
**.... .... शब्दार्थस्याऽनवच्छेदे विशेषस्मृतिहेतवः ।।**

(काव्यप्रकाशः)

पूर्वोक्तरीत्या अनुबन्धो वा आकर्षणम् वा अचेतनवस्तुगतं वा चेतनगतं वा यत्किञ्चित् वृत्तगतं वा सत् तत्तद्वस्तुविशेषे भिन्नभिन्नभावान् जनयति । आप्तदर्शनेन चित्तं मन्दाकिनीवीचिकाविलासविहारि भवत्येव । तथा अनुबन्धजनितानां, प्रीतिवैरुध्याद्याकर्षणजनितानां च भावविशेषाणां प्राचीनाः नवरसत्वं आपादयामासुः ।

**विभावैरनुभावैश्च सात्त्विकैः व्यभिचारिभि. ।**
**आनीयमानः स्वाद्यत्वं स्थायिभावो रसस्मृतः ।।**
**शृंगारहास्यकरुणा रौद्रवीरभयानकाः ।**
**भीभत्साद्भुतशान्ताश्च रसाः पूर्वैरुदाहृताः ।।** इति ।

एव मुद्भूतान् भावविशेषान् अन्येभ्यः प्रकटीकर्तुं मानवाः भाषां प्रधानसाधनत्वेन स्वीकुर्वन्ति । तस्य मानवसंकेतजन्यत्वं, मृगादिरवानुकरणजन्यत्वं च कथ्यते । स अप्रकृतः विषयः । भाषाद्वारा मानवः सुस्पष्टं भावविवरणं करोति । किन्तु भावप्रकटीकरणे सर्वे एकम् एव पन्थानम् न आश्रयन्ति । व्यक्तिगत – संस्कारानुगुण्येन भिन्नभिन्नप्रक्रियाभिः भावा प्रकटीक्रियमाणाः सन्ति । क्षुत्पिपासापीडितः सामान्यः "क्षुधातुरोऽस्मि, पिपासापीडितोऽस्मि" इत्येव तद्वक्ति । भावुको वा कविर्वा तथा न व्यक्तीकरोति । "मदीयोदरे मूषिकाः धावन्ति" इत्यादिव्यंग्यप्रक्रियानुसारेणैव प्रकटीकरोति । अयमेव पूर्वोक्तविषयस्योदाहरणम् । भावुकैः कविभिश्च अनुस्त्रियमाणा प्रक्रिया एव आलंकारिकैः व्यंग्यशब्देनोदाहृतः । तथा हि –

**भ्रम धार्मिक विस्रब्धं स शुनकोऽद्य मारितस्तेन ।**
**गोदावरीकच्छनिकुञ्जवासिना दृप्तसिंहेन ।।** इति ।

(ध्वन्यालोकः)

प्राप्तसंकेतस्थला काचन नायिका स्वैरविहारनिरोधकं ब्राह्मणं प्रत्येवं कथयति । अत्र भ्रम इति वाच्ये, मा भ्रम इति व्यंग्योत्पत्तिः भवति । शुनकभीरुः एव पुरुषः सिंहे सति कुतो वा तत्र चरेदिति अत्र व्यंग्यसाधनम् । तव निरोधो नास्तीति कथयन्त्येव सा स्वचातुर्या स्वनिरोधमेव अपासरत् । एवं रीत्या कथने वक्त्रा भावुकतापरिपोषकेण भाव्यम् ।

भावुकस्य सृष्टिः विचित्रपथानुसारिणी । कान्तानयनयोः तेन शरच्चन्द्रचन्द्रिका दृश्यते । प्रेयसीप्रियवचनेषु सः निर्झरमनोज्ञध्वनिं शृणोति । विनीलजलधरमालिकां दृष्ट्वा सः प्रोषितभर्तृकां नायिकां स्मरति । चेतनानां अचेतनत्वं, अचेतनानां चेतनत्वं च आपादयितुं शक्नोति कविः । कालिदासः मेघसन्देशे अचेतनानपि चेतनत्वेन चिन्तयित्वा मनोहरं काव्यं व्यरचयत् खलु । तथा हि –

**दीर्घीकुर्वन् पटु मदकलं कूजितं सारसनां**
**प्रत्यूषेषु स्फुटितकमलामोदमैत्रीकषायः ।**
**यत्र स्त्रीणां हरति सुरतग्लानिमङ्गानुकूलः**
**शिप्रावतः प्रियतम इव प्रार्थनाचाटुकारः ।।**

एवंरीत्या जन्मान्तरगतानुबन्धप्रभावविशेषेण वा, तत्तद्वस्तुगताकर्षणातिशयप्रभावेण वा जायमानां भावोद्रिक्ततां सर्वविलक्षणचमत्कारजनकविधानेन व्यक्तीकुर्वन् एव "कविः" इत्यस्मिन् विषये न संशयः ।

केवलं कवयते इति कविः इति कविशब्दं निर्वक्तुं शक्यते । किन्तु कवेः कानिचन प्रत्येकलक्षणानि सन्ति, किञ्चित् वैशिष्ट्यं

चास्ति । विवक्षितं विषयं सः याथातथं न वक्ति, किन्तु भङ्ग्यन्तराश्रयेण । उक्तं च पाश्चात्येन Sir Philer Sidnee नामकेन "Now for the poet he nothing affirms and therefore never leith" इति । अत एव ब्रह्मसृष्टेरपि भिन्ना कविसृष्टिः । तदुक्तं–

**नियतिकृतनियमरहितां ह्लाधैकमयीमनन्यपरतन्त्राम् ।**
**नवरसरुचिरां निर्मितिमादधती भारती कवेर्जयति ।।** इति ।

"नाऽनृषिः कुरुते काव्य"मिति प्राचीनानां वचः । काव्यकर्तृणा कविना अवश्यं ऋषिणा भाव्यमिति अस्य वाक्यस्य भावः । ऋषिशब्दस्य कामक्रोधाद्यरिषड्वर्गविजेता इत्यर्थकथनं न संगच्छते । यदि तथा कथ्येत तर्हि आधुनिकानां विमर्शकाणां वादानां सर्वेषामपि मिथ्यात्वमापादितं स्यात्, यतः आधुनिकाः विमर्शकाः काव्यपरिशीलनेन न केवलं कविकालादिकं निर्वर्णयन्ति, किन्तु कवेः मनस्तत्वमपि । यदि कविः कामक्रोधादिजेता तर्हि कथं वा तन्मनस्तत्वं काव्यद्वारा ज्ञातुं शक्यं भवति । तेन विरचितस्य सर्वस्यापि विषयस्य भावनाजन्मत्वमेव अंगीकार्यं, न तु स्वमनोभावनात्वं । आलोचनजन्यभावानां मनस्तत्वस्य भेदो दृश्यत एव । अतः ऋषिशब्दस्य "कामक्रोधादिविजेते"त्यर्थकथने "नाऽनृषिः कुरुते काव्य"मिति वाक्यं असंगतं स्यात् । अतः ऋषिशब्दस्य अतीतदृष्टिमान् इति वा अलौकिकदृष्टिमानिति वा अर्थो वक्तव्यः । सैव अलौकिकदृष्टिः अलौकिकानन्दहेतुभूता अस्ति । अतः अलौकिकदृष्टिपरिपुष्टमनस्कः अत एव नवनवोन्मेष प्रतिभोल्लसितः कविः ।

एवं च अलौकिकदृष्टया दृष्टान् भावान् यः सर्वजनविलक्षणचमत्कारजनकसंविधानेन व्यक्तीकरोति सः कविः इति कवि शब्दस्य निर्वचनम् ।



# गुरुवायुपुराधीशदण्डकः

रचयिता श्री विद्वान् बालगणपतिभट्टः, श्रीरङ्गपत्तनम्.

गुरुवातपुराधीशं भवबंधनतारकम् ।
शंखचक्रगदापद्मशोभितं शरणं भजे ॥

वन्दे वन्दारुमन्दारं इन्दिरामन्दिरं शुभम् ।
अमन्दानन्दसन्दोहदातारं शरणं भजे ॥

जय वातपुराधीश जय वागीशसन्नुत ।
जय वर्षांबुदश्याम जय वेदांतसन्नुत ॥

जय जयगुरुवातगेहेश्वराजादिजेशादि देवौघवंद्यांघ्रिपंकेज, जाम्बूनदाभूष, जम्भारिदम्भव्रजोच्छेद, गोविन्द, कंसांतकादित्यकोटिप्रकाश प्रभो, योगिहृत्पंकजानन्ददानाब्जबंधो, गदाशंखकौमोदकीचक्रपाणे, नताभीष्टचिन्तामणे, योगिचूडामणे, श्रीमणे पाहि मां पाहि मां पाहि माम् ।

गुरुपवनपुराधिपाग्रागतागस्कृनागःकुलांधौघनाशैकदीक्षागुरो, गोकुलावास गोपाल, गोपांगनाप्रेमपीयूषगंगावगापानलोलागगोवर्धनोद्धार, गोपेश, नन्दात्मजानन्दसिंधो, गजेन्द्रापदुद्धार, गंगापगासंगिनीतीरखेलादृताग्रार्चनार्हप्रभो गोपबंधो, पाहि मां पाहि मां पाहि माम् ।

पवनपुरनिवास पीतांबरालंकृतापद्विनाशैकबंधो, पयोधीशकन्यापते, पादपद्मार्चितानन्तदेवाधिदेवोत्तमातीत कारुण्यपूर्णाप्रमेय,

प्रकृष्टासुरध्वंस, पादप्रणम्रार्तलोकार्तिनिर्वापणापूर्वशक्ते, पतत्रीशपत्राननाब्जोल्लसद्दिव्यकांते, प्रतिज्ञातधर्मोद्धते पाहि मां पाहि माम् ।

पवनपुरपतेऽब्जनाभेऽब्जनेत्राब्जपाणेऽब्जपादाब्जमालांग, वन्दारुमन्दारमन्दाक्षिपीडापहार प्रभो मन्दरोद्धार, मन्दाकिनीपूरपादातिसौंदर्यसिंधो, दशास्यादिदैतेयशिक्षासुदक्ष क्षमादुःखदूरात्तमत्स्यादिदिव्याकृते, हे रतीशांग राधाचकोरेष्टराकाशशांक प्रभो, पाहि माम्, पाहि माम् ॥




(गूढलेखिनी)

अमेरिकायाः प्रसिद्धेषु आविष्कारकेषु श्री थॉमस एडिसन नामा प्रमुख बभूव । सः एव फोनोग्राम-विद्युद्दीप-विद्युत्-ट्रेन-इत्यादिकानां सहस्राधिकानां वस्तूनां प्रथमकल्पकः आसीत् । तस्य जीवनकाले तस्य विषये किंवदंती आसीत् यत् सः सर्वदा भोजनस्नानादिकार्याणां समयेष्वपि यस्य कस्यापि यंत्रस्य चिंतने निमग्नो वर्तते । तं बहवः जनाः सभासु भाषाणानि दातुं तथा सायंभोजनार्थं न्यमंत्रयन् । सोऽपि तादृशनिमंत्रणानि सहसा न अनुमनुते स्म क्वचिन्मित्राग्रहेण गच्छति स्म, एकवारं इत्थमेव सभां गतः आसीत् । भोजनोत्तरं वक्ता तस्य सभ्येभ्यः परिचयं यच्छन् उचे– "एते श्री एडिसन महाभागाः अतीव बुद्धिमन्तः राष्ट्रस्य सुखसंपत्तेः मूलकारणभूताः ललामभूताः सन्ति । सदा तेषां चित्तं नूतनयंत्रस्य चिंतने एव निमग्नं वर्तते । तेनैव

वयं विविधसुविधाः प्राप्नुमः। अतः अतीव सम्मानार्हाः एते" (मध्ये एव श्री एडिसनं प्रति मुखं कृत्वा पप्रच्छ) "किं सुष्ठु? भवन्तः अस्मिन्समये कस्य यन्त्रस्य चिंतने निमग्नाः सन्ति ?" इति ।

श्री एडिसनमहाभागः आत्मश्लाघां श्रुत्वा उद्विग्नः, कथं गंतुं शक्ष्ये ? इत्येव चिंतयन्नासीत् । तस्य प्रश्नस्य प्रसंगस्य लाभं गृहित्वा झटिति "पलायनयंत्रस्यैव" इति कथयित्वा अन्यस्मिन्नेव क्षणे सभागृहात् निर्गत्य स्वीययानेन पलायनं चक्रे ।

आबाल्यं विविधा आपदः सोढवा स्वमातुः उपदेशं अनुसरन् एव सः महत्पदं आरूढः आसीत् । स कदाऽपि हि संकटग्रस्तं, साह्यार्थे आगतं, न निवर्तयामास । तस्य धार्मिकविचाराः सर्वथा क्रिस्तमतविपरीताः बभूवुः । स वेदान्ते श्रीविवेकानंदानां प्रवचनेषु स्वीयमतानां समर्थनं लेभे ।

---

## साष्टांगाष्टकम्

**रचयिता श्री बालगणपतिभट्टः**, श्रीरंगपत्तनम्.

उरसा मनसा दृष्टया शिरसा वचसा तथा ।
पद्भ्यां कराभ्यां कर्णाभ्यां प्रणामोऽष्टाङ्ग उच्यते ॥

कर्तुं मे किल कोपि वा किमपि वा योग्यः कदावापि नो
हीत्थं भूरिमदावलेपनफलात् शश्वत्प्रभुं शङ्करम् ।
सर्वेशं जगदीश्वरं सकलदं दूरीचकार स्वयम्
**नीचोरः!** पुरतस्स्थतावनरतं देवं नमाऽद्यादरात् ॥

संसाराधिगतं सुखं खलु महन्नित्यं सदा तृप्तिदम्
हीत्थं भावनया किलानुदिवसं यत्नं तदर्थं कृतम् ।

लालापानमिवास्ति सा नवशिशोरङ्गुष्ठमात्रे भ्रामिः
त्यक्त्वा तां जगदीश्वरं नम सदा भक्त्या पुनर्हे **मनः** !

पश्यन्ती पुरतस्समागतमहो सर्वञ्च **दृष्टे** ! मुहुः
स्थित्वा जातु विशालमन्दिरवरे चित्रं चलत्सुन्दरम् ।
दृष्ट्वाऽनित्यसुखं त्विदं स्थिरमिति व्यर्थं भ्रमित्वा पुनः
यातस्ते समयो मुधा पशुपतिं शम्भुं नमाऽद्यादरात् ॥

नित्यं तैलसुगन्धलेपितमहो सीमन्तसंशोभितम्
शश्वत्कङ्कतिकाकरेण बहुधा सम्मानितं त्वम् **शिरः** ।
प्रत्यक्षं समुपागतं त्वधिकृतं ह्युच्चं नमित्वा भवान्
व्यर्थं कालमहो निनाय गिरिजाजानिं नमाऽद्यादरात् ॥

कण्ठाद्ये जननप्रदेशनिवहे जातैर्मुहुर्गुम्फिता
वर्णैस्त्वं सततं सहागतजनैः शश्वन्मुधा भाषसे ।
नास्त्यन्तं न च मध्यमादिरहितं व्यर्थं पुनस्ते खलु
जातो वै समयो नमाऽद्य गिरिशं **भो वाक्** ! महेशं विभुम् ॥

ग्रामीणेऽध्वनि कण्टकावृतपथे वा राजमार्गेऽथवा
नित्यं रासभकुक्कुरादिशमलं ह्याधानयित्वा गतौ ।
**हे पादौ** ! समयो निरर्थकमभूद्यावधिर्मूल्यवान्
तस्मादाशु महेश्वरञ्च नमतं देवं प्रभुं शङ्करम् ॥

दुर्वस्तुग्रहणे सदा हि निरतौ दुर्वस्तुदानेऽथवा
नित्यं मूढपरप्रतारणकलाविज्ञौ तथा लेखने ।
दुष्टे नित्यरतौ ततो न समयोऽमूल्यस्तु व्यर्थोऽभवत्
ईशानं खलु **भो करौ** ! हि नमतं देवं प्रभुं शङ्करम् ॥

वाक्चित्तेषु सुमुद्रितोऽथ बहुधा व्रीडावहो यो ध्वनिः
**हे कर्णौ** नितरां श्रुतो ह्यनुदिनं मोघो युवाभ्यां हि सः ।
नामासीन्न कदापि तत्र गिरिजाजानेर्हि पुण्यप्रदम्
तस्मादद्य युवां हतौ च नमतं देवं भवानीपतिम् ॥





# परीधावि - उत्तरायणपरीक्षाफलानि

# Samskrita Basha Pracharini Sabha, Chittoor.

## Results of April Examinations 1973.

The following are the Register Numbers of successful Candidates who appear for the Samskrit Examinations held on 7, 8 & 9 th April 1973.

### PARICHAYA

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| | I Class:- | | 866 | 867 | 882 | 884 | 901 | 908 |
| 910 | 912 | 915 | 918 | 920 | 921 | 922 | 924 | 926 |
| 927 | 929 | 946 | 948 | 958 | 970 | 973 | 974 | 975 |
| 1014 | 1020 | 1021 | 1024 | 1025 | 1049 | 1051 | 1058 | 1090 |
| 1101 | 1103 | 1104 | 1107 | 1108 | 1110 | 1111 | 1114 | 1115 |
| 1116 | 1117 | 1118 | 1119 | 1123 | 1124 | 1273 | 1276 | 1285 |
| 1286 | 1368 | 1369 | 1382 | 1383 | 1384 | 1391 | 1456 | 1457 |
| 1460 | 1462 | 1464 | 1465 | 1466 | 1470 | 1471 | 1473 | 1474 |
| 1475 | 1476 | 1478 | 1482 | 1494 | 1485 | 1486 | 1488 | 1489 |
| 1490 | 1493 | 1498 | 1499 | 1500 | 1504 | 1505 | 1515 | 1516 |
| 1519 | 1520 | 1529 | 1530 | 1531 | 1533 | 1535 | 1590 | 1592 |
| 1593 | 1610 | 1614 | 1619 | 1640 | 1647 | 1650 | 1657 | 1658 |
| 1661 | 1664 | 1667 | 1669 | 1670 | 1671 | 1672 | 1673 | 1693 |
| 1704 | 1708 | 1746 | 1767 A | 1796 | 1807 | 1853 | 1879 | 1881 |
| 1884 | 1887 | 1888 | 1894 | 1897 | 1898 | and | 1903 | |
| | II Class:- | | 865 | 883 | 886 | 894 | 895 | 897 |
| 899 | 900 | 902 | 904 | 909 | 916 | 943 | 945 | 947 |

P. T. O.

949 959 971 972 977 978 980 993 1015
1016 1018 1019 1023 1046 1047 1050 1054 1055
1056 1059 1062 1063 1065 1069 1070 1091 1098
1105 1122 1127 1135 1136 1150 1233 1234 1235
1237 1243 1246 1253 1254 1256 1270 1271 1282
1350 1367 1372 1373 1374 1375 1376 1377 1378
1387 1399 1400 1433 1461 1463 1467 1468 1469
1472 1480 1487 1491 1497 1516 A 1518 1524 1525
1533 1547 1548 1550 1569 1591 1602 1604 1605
1606 1608 1609 1611 1612 1615 1616 1617 1620
1622 1623 1636 1637 1639 1641 1648 1649 1652
1653 1654 1656 1662 1663 1665 1666 1668 1692
1702 1703 1705 1706 1707 1718 1745 1750 1751
1752 1754 1755 1758 1765 1766 1768 1769 1773
1776 1793 1801 1802 1804 1808 1816 1817 1818
1821 1826 1856 1857 1880 1882 1883 1885 1886
1889 1890 1905 1922 and 1924

III Class:- 864 865 887 893 896 898
905 906 939 940 941 942 960 976 979
987 996 997 998 999 1009 1010 1012 1013
1017 1026 1048 1052 1053 1060 1064 1066 1067
1068 1071 1072 1073 1074 1102 1137 114. 1143
1144 1149 1157 1159 1161 1164 1165 1166 1168
1170 1172 1231 1232 1236 1237 A 1238 1239 1241
1242 1244 1245 1247 1255 1262 1265 1266 1268
1272 1275 1277 1278 1279 1281 1284 135 1352
1361 1364 1385 1386 1401 1402 1444 1445 1455
1479 1483 1501 1506 1517 1526 1534 1545 1549
1603 1607 1613 1618 1621 1624 1625 1638 1642
1651 1655 1660 1710 1715 1716 1748 1749 1753

1756 1759 1760 1774 1775 1777 1797 1800 1803
1805 1819 1820 1822 1823 1824 1825 1827 1828
1854 1891 1892 1895 1921 1923 and 1926

## ABHIJNA

I Class:- 862 863 874 875 931 932
934 935 954 1001 1033 1036 1037 1132 1181
1407 1410 1459 1507 1521 1594 1595 1596 1598
1645 1674 1676 1677 1678 1681 1682 and 1683

II Class:- 861 888 889 890 891 892
950 951 952 953 964 1034 1035 1038 1039
1040 1042 1075 1076 1077 1174 1175 1178 1186
1202 1203 1208 1257 1258 1259 1260 1261 1292
1301 1310 1365 1408 1411 1418 1458 1494 1502
1503 1511 1522 1537 1572 1576 1578 1580 1581
1597 1627 1628 1643 1646 1679 1680 1684 1685
1719 1722 1723 1779 1789 1790 1792 1793 1834
1839 1867 1906 1907 1908 1913 1917 1918 and
1927

III Class:- 872 878 963 989 991 1000
1002 1003 1005 1078 1173 1176 1179 1180 1184
1185 1189 1191 1193 1195 1200 1205 1206 1289
1294 1295 1296 1297 1298 1299 1302 1303 1305
1307 1312 1417 1419 1420 1421 1422 1509 1510
1536 1538 1539 1541 1570 1573 1574 1575 1577
1579 1582 1583 1584 1585 1587 1626 1629 1630
1631 1632 1633 1721 1781 1783 1784 1785 1787
1791 1795 1812 1813 1814 1831 1833 1835 1838
1840 1841 1861 1862 1864 1866 1899 1915 and
1916

## VICHAKSHANA

I Class:- 1084 1214 1636 1734 and 1735
II Class:- 876 879 880 983 1082 1083
1212 1213 1217 1218 1252 1327 1338 1340 1366

1432 1633 1634 1635 1687 1688 1689 1725 1728 1781 1844 1845 and 1920

III Class:- 878 938 984 985 1216 1220 1222 1229 1251 1315 1316 1320 1321 1322 1323 1324 1326 1328 1329 1330 133[illegible] 1332 1334 1336 1337 1341 1342 1343 1423 1427 1429 1431 1439 1543 1551 1695 1696 1847 1818 1863 1869 1870 1909 1910 1911 and 1912

SAMARTHA

I Class:- Nil

II Class:- 1344 1346 1433 1440 and 1512

III Class:- 986 1007 1008 1085 1086 1087 1089 1131 1347 1552 1737 1852 1871 1872 1873 1874 1875 1876 1877 and 1878

I Part only:- 1133 1599 1600 & 1601

II Part only:- 955 1088 1426 1434 1496 1553 1691 1738 & 1851.

KOVIDA

I Class:- Nil.

II Class:- 1441 only.

III Class:- 967 968 969 and 1442.

I Part only:- 881 only.

I, II & IV Parts only:- 1929 only.

I, III & V Parts only:- 1437 only,

I & V Parts only.- 957 only.

II & V Parts only:- 1740 1741 and 1743.

IV Part only:- 1443 only.

V Part only:- 1348 1349 1739 and 1742

The following candidates stood first in I Class in the Examinations mentioned below.

Prizes will be awarded to them in due course.

Parichaya:- No. 918. Santha Iyer, Indraprastha. (New Delhi).

Abhijna:- No. 1678, S. Subha, Srirangam.

Vichakshana:- No. 1734, Ramadevi, Salem.

की. श्रीनिवासाचार्यः,

1—6—73. परीक्षामन्त्री.

# परीधाव्युत्तरायण (April 1973) परीक्षासु उपयुक्तानि केन्द्राणि – ५७.

---

(१) अंबत्तूरु (२) अनन्तपुरम् (३) अनकापल्ली (४) आत्रेयपुरम् (५) आदोनी (६) आर्यवटम् (७) इंद्रप्रस्थम् (८) इलंगाडु (९) कडपा (१०) कर्नूलु (११) काकिनाड (१२) कुंभकोणम् (१३) कोंडमाचुपल्ली (१४) कोमरगिरिपट्णम् (१५) कोरसवाडा (१६) कोयंबत्तूरु - ए (१७) कोयंबत्तूरु - बी (१८) क्रोंपेट (१९) गद्वाल् (२०) चित्तूरु (२१) चिदंबरम् (२२) तंजावूरु (२३) तांडूरु (२४) ताडेपल्लिगूडेम् (२५) तिरुमल (२६) तिरुपति (२७) तिरुवेंगाडु (२८) तिरुचिरापल्ली (२९) त्यागरायनगर् (३०) दोम्मरनंद्याल (३१) निवगाम् (३२) नेल्लूरु (३३) पिठापुरम् (३४) पेद्दापुरम् (३५) भीमवरम् (३६) मंत्रालयः (३७) मदनपल्ली (३८) मदुरै - ए (३९) मदुरै - बी (४०) मन्नार्गुडी (४१) मुक्कामल (४२) राजमंड्री (४३) रामनाथपुरम् (४४) रायदुर्ग (४५) लेपाक्षी (४६) बट्टिचेरुकूरु (४७) वड्डवूरु (४८) विजयनगरम् (४९) विल्लुपुरम् (५०) शाहपूर (५१) श्रीकाकुलम् (५२) श्रीरंगम् (५३) श्रीरामापुरम् (५४) सत्यवेडु (५५) सेलम् (५६) हिन्दुपूर (५७) हैदराबाद ।



# परीधावि - उत्तरायणपरीक्षाफलसारिणी

## उत्तीर्णाः – ७६३.

| परीक्षा | अभ्यर्थिनः | उपस्थिताः | उत्तीर्णाः | | | |
|---|---|---|---|---|---|---|
| | | | प्र. श्रे. | द्वि. श्रे. | तृ. श्रे. | खंडशः |
| परिचयः | 605 | 508 | 130 | 164 | 139 | — |
| अभिज्ञः | 282 | 249 | 32 | 78 | 87 | — |
| विचक्षणः | 101 | 92 | 4 | 28 | 46 | — |
| समर्थः | 47 | 43 | — | 5 | 20 | 13 |
| कोविदः | 19 | 18 | — | 1 | 4 | 12 |
| आहत्य | 1054 | 910 | 166 | 276 | 296 | 25 |

संस्कृतभाषाप्रचारिणी सभा,
1—6—73.

की. श्रीनिवासाचार्यः,
परीक्षामन्त्री.

# प्रमादीच - दक्षिणायनपरीक्षाणां सन्नाहकार्यक्रमः

| विना विलम्बशुल्कं आवेदनपत्राणां प्रेषणायान्तिमावधिः | १ रू. विलंबशुल्केन सह आवेदनपत्र-प्रषणाय अन्तिमावधिः | परीक्षाणां प्रचलनसमयः |
|---|---|---|
| 20—7—73 | 31—7—73 | कोविदः सेप्टम्बर 8, 9, 10 तिथिषु, विचक्षणसमर्थौ 8, 9 तिथ्योः, परिचयाभिज्ञे 9 तिथौ |

आवेदनपत्राणि 20 पैसामात्र - पोस्टलचीटिकाप्रेषणे विना मूल्यं प्रेष्येरन् ।

**शुल्कं—**

परिचयः रू. 1—50; अभिज्ञः रू. 3—00;

विचक्षणः रू. 4—00; समर्थः रू. 6—00;

कोविदः रू. 10—00;

विशेषानुमतिशुल्कम् (Examption fee) रू. 5—00.

विलंबशुल्कम् (Late fee) रू. 1—00.

परिचयाभिज्ञविचक्षणसमर्थपाठ्यपुस्तकानि सभायां लभ्येरन् । विशेषजिज्ञासायां 20 पैसामात्राः पोस्टलचीटिकाः प्रेषणीयाः ।

**प्रधानमन्त्री,**
संस्कृतभाषाप्रचारिणी सभा,
चित्तूरु. (आं. प्र.)

# गांधीकथा



अपि महात्मागांधी पादशकटारोहणाभ्यस्तः? अस्योत्तरं दातुं समर्था बिरला एव। अयन्तु महात्मा तथापि कलां जानाति स्म।

बहवो वदंति गांधीमहोदयः 'यन्त्रविरोधी' इति। किन्तु तन्न सत्यम्। 'सीवनयंत्रं महल्लोकोपकारकं' इति यदा कदा वा प्रशंसति स्म। "यदि भारतस्य क्षुद्रोपि ग्रामः विद्युत्सौकर्यं लब्धुं समर्थो भवेत् तामेव शक्तिमुपयुज्य ग्रामोद्योगीकरणे प्रयत्नं करोमि" इति च वदति स्म।

तदानीं गांधी महाशयः साबरमती आश्रमे वसति स्म। कार्यगौरवेण स्थानांतरं गतस्सः तस्मिन्नेव दिने स्वेनैव निश्चिते कार्यान्तरे उपस्थातुं यथासमयं असर्थोऽभवत्। कथमपि स्वोद्दिष्टं कर्म परिसमाप्य प्रतिनिवर्तते स्म। तदैव तस्याग्रे आश्रमवासी कश्चन पादशकटेनाऽऽजगाम।

"कुत्र प्रास्थित ?" गांधी अपृच्छत्। "बापूजी, भवद्भिः सा सभाऽलंकर्तव्या इदानीम्। भवद्भिरेव सभाव्यवस्थापकानां अनुमतिर्दत्ता ननु? केवलं दश निमेषा अवशिष्टाः। भवतः स्मारयितुं आगतोस्मि" इति सोऽवदत्।

"एवं तर्हि ते पादशकटं मे देहि" "आश्चर्यम्! किं तत्र भवन्तः एतेन शकटेन गच्छन्ति? कुत्राऽपि पतिताश्चेत्? राजमार्गे जनसम्मर्दोप्यस्ति"।

"आफ्रिका-वाससमये मया कृतोभ्यासः किं विस्मरणार्थम्? गच्छ, गच्छ, समयं व्यर्थं मा यापय" इति वदन्नेव पादशकटोपरिस्थानमुद्दिष्टं प्रति प्रस्थितो महात्मा।

---

बालशंकरः– "राजन्! भवतः किमस्माभिः कार्यमस्ति? यद्भवान् इयद्दूरं आगतः"।

चन्द्रशेखरः– "स्वामिन्! मया त्रीणि नाटकानि रचितानि। तत्र दोषाश्चेत् स्युः तर्हि ज्ञापनीयाः" इति राजा प्रार्थयामास।

बालशंकरः तन्नाटकत्रयं सावधानमाकर्ण्य लोपान् आपूर्य राजनं सन्तुष्टचित्तं अकरोत्।

चन्द्रशेखरः– "स्वामिन्! भवदर्थं मयाऽऽनीतं द्रव्यजातं परिगृह्य मां धन्यं विधेहि।

बालशंकरः– "राजन्! नेदमस्माकं अपेक्षितं; अत्रत्यान् दरिद्रानाहूय तेभ्यस्तद्द्रव्यं देहि।

इत्येवं राजानमादिश्य तथा कारयित्वा तमामन्त्रयामास।

## ४. सन्यासः

शंकरस्य अष्टमजन्मदिने केचित् महर्षयः तद्गृहमागताः। ते तं बालमन्तिके उपवेश्य "भवान् आर्यधर्मस्थापनार्थमवतीर्णः साक्षात् शंकरः; अतोऽत्र कालं मा वृथा नैषी इति चेतयामासुः।

आर्याम्बा– महात्मानः! किमुच्यते तत्र भवद्भिः इममर्भकं प्रति?

महर्षयः– अम्ब! त्वदीय. कुमारः स्वीयपरिमितायुष्काले महत्कार्यं कुर्यात्।

आर्याम्बा– अस्य आयुष्कालः कियान्?

ऋषयः– षोडश वर्षा एव।

ते तस्याः भर्तुः शिवगुरोः वरं– "अल्पायुः महापुरुषः सुतो भवतु" इत्येवंरूपं ज्ञापयित्वा गता यथागतम्।

आर्याम्बा दुःखिता सती– "वत्स ! इदं सत्यं चेत् त्वं शीघ्रमेव विवाहं कुरु; तेन पत्न्याः पातिव्रत्यमहिम्ना तव दीर्घमायुर्भविष्यति" इत्याह ।

शंकरः– अम्ब ! इदमाद्यं यज्ञोपवीतमेव ममऽतिभारावहं भाति । सत्येवं द्वितीययज्ञोपवीतधारणकारिण्याः द्वितीयायाः परिग्रहः मामस्वतन्त्रं उद्दिष्टकार्यभ्रष्टं च कुर्यात् । अतो विवाहप्रसक्तिर्माऽस्तु । प्रत्युत सन्यासः कर्तव्यः; तदर्थं अनुमतिर्दीयताम् ।

अम्बा– वत्स ! किमेतत् ब्रवीषि ? कांचित्कन्यां परिणीय पुत्रवान् न भवसि चेत् वंशः कथं धृतो भविष्यति ? पितरः अधोगतिं प्राप्नुयुः । सन्न्यस्य यदि त्वं मां विहाय गच्छसि मरणादनु मम उत्तरक्रियाः कः कुर्यात् ?

एवं सा विललाप । तां अनुनेतुं शंकरः प्रवृत्तः । परन्तु जननी सन्यासाय अनुमतिप्रदानं निराकृतवती ।

सन्यासानुमतिं प्राप्तुं शंकरः प्रतीक्षमाण आसीत् । कदाचित् पूर्णानद्यां स्नानार्थं मात्रा साकं शंकरो गतः । स्नानं कुर्वतः शंकरस्य पादं कश्चिद्ग्राहो जग्राह । स अन्तरन्तराकर्षन्नास्त । शंकरः– "अम्ब ! ग्राहो मां कर्षति एह्येहि, पाहि पाहि" इति चुक्रोश । आर्याम्बा पुत्ररक्षणोपायं अजानन्ती नदीतीरे इतस्ततः ससंभ्रमं धावन्ती आक्रन्दनं अकरोत् । बालस्तत्समये अम्ब ! "नाऽहं मुञ्चामि यावत्सन्न्यासं न करिष्यसि" इति वचश्श्रूयतेऽन्तर्भागात् । सन्यासाय वा स्वर्गाय वा सत्वरमनुमतिर्दीयतामिति सदैन्यं प्रार्थयामास ।

गत्यन्तराभावात् सा पुत्रं सन्यस्तुं अनुमेने । शंकरोऽपि नदीजलस्थित एव सन्यासं स्वीकृत्य भवबंधाद्विमुक्त इव मकरमुखान्मुक्तस्सन् तीरं प्राप ।

आर्याम्बा– वत्स ! गृहमागच्छ । व्रणचिकित्सां कारयिष्यामि यावत् ।

शंकरः– यतिरहं संवृत्तः; गृहं कथं आगच्छेयम् ? नर्मदातीरे गोविन्दयतिवरं उपसद्य सन्यासाश्रमं यथाविधि स्वीकरिष्यामि । सा पुनर्यथापूर्वं एतद्वाक्यं श्रुत्वा विलपितुं उपचक्रमे– "वत्स ! इतस्त्वयि गतवति मम गतिः का वा भविष्यति?" इति ।

शंकरः– अम्ब ! इतः परं भट्टारक एव त्वां रक्षेत् । अन्त्यकाले मामनुस्मर । अवश्यमागमिष्यामि; यत्र कुत्राऽपि स्याम्, तव अन्त्यसंस्कारं करिष्यामि । इत्युक्त्वा पूर्वाश्रमे निजज्ञातिं भट्टारकमाहूय "भ्रातः ! इतः परं त्वमेव मत्प्रतिनिधीभूय मातुः संरक्षणं कुरु । मदीयं सर्वं स्वं स्थिरचररूपं त्वदधीनं भविष्यति; त्वमेव भुङ्क्ष्व" इत्यादिश्य तमङ्गीकारयामास ।

## ५. गोविन्दयतिः

ऊनदशवर्षदेशीयः शंकरः बालयतिर्भूत्वा काषायांबरधारी सन् दण्डं करे धृत्वा उत्तराभिमुखो नर्मदातीरं गत्वा गोविन्दयतिपुंगवस्य आश्रमं प्राप ।

तत्रत्याः तदीयं वेषं दृष्ट्वा साश्चर्या बभूवुः ।

शंकरः– गोविन्दयतिवराः कुत्र सन्ति ?

तत्रत्याः– ते तस्यां गुहायां सामाधिमग्नाः सन्ति । तद्दर्शनार्थमेव वयमपि प्रतीक्षामहे । बालयतिः शंकरः न प्रतीक्षते स्म ते यथा । समनन्तरमेव स गुहां प्रविश्य आदिशेषावतारं गोविन्दयतिं स्तोतुमारेभे । यतिवरोऽपि ध्यानमुद्राविनिद्रस्सन् "कोऽसि बालकस्त्वं"? इति प्रप्रच्छ ।

शंकरः– अहं ब्रह्माऽस्मि; ब्रह्माऽहमस्मि इति ज्ञातवानहम् ।

गोविन्दयतिः– (सहर्षं) किमहं ते कुर्याम् ?

शंकरः– सरहस्यं वेदविज्ञानमधिगतं । बादरायणप्रणीत-ब्रह्मसूत्राणां यथार्थं विवरणं अनुगृह्य सन्यासाश्रमविधानं यथाविधि अनुगृह्णातु तत्रभवान् ।

गोविन्दयति शंकरं शिष्यं स्वीचकार । सन्यासाश्रमं प्रसाद्य, ब्रह्मसूत्राणि प्रबोध्य वेदान्तरहस्यं विशदीचकार ।

कदाचित् शंकरः गुहायां गुरोः सकाशे यदाऽऽसीत् तदा बहिः कश्चिदार्तनादः श्रुतः । बहिरागते शंकरे, समन्ततः स प्रदेशः जल-मय आसीत् । तत्प्रान्तवासिनः सर्वेऽपि प्रवाहात् प्राणरक्षणार्थं पर्वतशिखरं प्राप्ताः । तत्रत्यान् कतिपयान् शंकरः पप्रच्छ– कथमिदं जलं? इति । तेऽपि– "महती वृष्टिरासीत्, नर्मदाप्रवाहः उद्धूतः आसीत् । प्रवाहेऽस्मिन् अस्माकं पशव, वस्तुजातानि, गृह - क्षेत्राणि सर्वाण्यपि जलप्लावितान्यासन्; अथ अस्माकं प्राण-हानिरपि संभाव्यते" इति व्यलपन् । शंकरे तद्रक्षणं कथं कर्तव्य-मिति चिन्तयति प्रवाहानीतः कश्चिद्घटो दृष्टिपथ गतः । शंकरस्तं घटमादायाभिमन्त्र्य पुनः प्रवाहे व्यसृजत् । कुम्भसम्भव समुद्रजल-मिव स कुम्भः प्रवाहजलं सर्वमपि स्वकुक्षौ निक्षिप्तवान् । निर्जलं तं प्रदेशं दृष्ट्वा गिरिशिखरादवतीर्णा जना शंकरं महात्मानं भावयन्तः साष्टाङ्गप्रणिपातं "रक्षिता वयं बालरूपधारिणा पर-मात्मना तत्रभवता" इति स्तोतुमारेभिरे ।

गोविन्दयतिशेखरः शंकराय पञ्चवर्षान् सकलाविद्या उपा-दिशत् । "वत्स! त्वं परमशिवांशेन जातोऽसि । लोके अज्ञानं दूरीकृत्य परब्रह्मस्वरूपं प्रबोधय । इतः परं न काऽपि विद्याऽपूर्वा मत्तः संग्राह्याऽस्ति ते । काशीं गत्वा व्यासमहर्षेः ब्रह्मसूत्राणां भाष्यं विरचय" इत्यादिश्य आशीर्वादपुरस्सरं तं आमन्त्रयामास ।

# सूचना

परिचयाभिज्ञविचक्षणसमर्थपरीक्षा पाठ्यपुस्तकानि सभायां लभ्येरन् ।

प्रधानमन्त्री,
संस्कृतभाषाप्रचारिणी सभा,
चित्तूरु. (आं. प्र.)

## సంతానదీపిక
(తెలుగులిపి)

సాంద్రతాత్పర్యము. సకలవిధసంతానప్రతిబంధయోగములను జాతకచక్రమున గుర్తించుటయు, ఆ ప్రతిబంధములకు కారణములు తెలిసికొని, వానికి ప్రాయశ్చిత్తములు నిర్ణయించుటయు సప్రమాణముగా నిందు చూపబడినది.

దీని వెల 1-00 మాత్రము.
పోస్టేజి ప్రత్యేకము.

## శ్రీ వైష్ణవస్తోత్రమంజరి
(తెలుగులిపి)

ఇందు శ్రీవైష్ణవులకు నిత్యానుసంధేయములగు స్తోత్రములన్నియు చేర్పబడియున్నవి. శ్రీరామానుజాష్టోత్తరశతనామస్తోత్రముతోపాటు నామావళియును కూర్పబడియున్నది.

దీని వెల 1-00 మాత్రము.
(పోస్టేజి ప్రత్యేకము)

విజయ నిశ్రేణి గ్రంథమాల,
8-2-44, జండావీధి, చిత్తూరు.

*R. N. 1845/60.* *Postal R. H. No. 493.*
Licensed to Post without Prepayment. LICENCE No. 57.
आन्ध्रप्रदेशसर्वकारेणानुमोदिता R. C. No. 27-A 3/65 Dated 14-7-65.

भारतसर्वकारेण पुरस्कृता च

# गैर्वाणी

वार्षिकम् ४-००

## प्रहेलिका

---

कवचेन पिहितकायः पीतवर्णस्सितांतः
त्रिणनयनसुहृदग्रः श्लक्ष्णदेहस्सुपूर्णः ।
शतशतसहजातः मातृमृत्युस्वरूपः
सपदि कथय विद्वन् मेऽभिधानं प्रसिद्धम् ॥

— कदलीफलं ।

– श्री बालगणपतिभट्टः, श्रीरंगपत्तनम्.

---

Published by Sri N. Ramanatha Iyer B A; B. L., Advocate
& Secretary S. B. P. Sabha, Chittoor (A. P.)
Printed by Sri T K Thiruvengadacharya
at Vijaya Press, Chittoor (A. P.) C 1500